# अथ समासचक्रप्रारंभः ॥

किंमत १ आणा.

கிம்மத் : அணா

श्रीगणेशाय नमः ॥ ॥ षोढा समासाः संक्षेपादष्टाविंशतिधा पुनः ॥ नित्यानित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ॥१॥ तत्राष्टधा तत्पुरुषः सप्तधा कर्मधारयः ॥ सप्तधा च बहुव्रीहिर्द्विगुराभाषितो द्विधा ॥ २ ॥ द्वंद्वोऽपि द्विविधो ज्ञेयोऽव्ययीभावो द्विधा मतः ॥ तेषां पुनः समासानां प्राधान्यं स्याच्चतुर्विधम् ॥३॥ चकारबहुलो द्वंद्वः स चासौ कर्मधारयः ॥ यस्य येषां बहुव्रीहिः शेषस्तत्पुरुषः स्मृतः ॥ ४ ॥ कर्तृकर्मक्रियायुक्तः प्रयोगः स्यात्सकर्मकः ॥ अकर्मकः कर्मशून्यः कर्मद्वंद्वो द्विकर्मकः ॥ ५ ॥ अथ बालबोधार्थं प्रयोगविधिः कथ्यते ॥ प्रयोगाः पंचविधाः ॥ सकर्मकोऽकर्मकः कर्मणि भावे द्विकर्मकश्चेति भेदात् ॥ सकर्मकप्रयोगो यथा ॥ कृष्णो भक्तान् रक्ष-



ति ॥१॥ अकर्मकप्रयोगो यथा ॥ कृष्णस्तिष्ठति ॥२॥ कर्मणि प्रयोगो यथा ॥ विष्णुना प्रपंचः क्रियते ॥ ३ ॥ भावेप्रयोगो यथा ॥ कृष्णेन स्थीयते ॥ ४ ॥ द्विकर्मकप्रयोगो यथा ॥ यो धरामन्नं दुदोह ॥५॥ इति प्रयोगविधिः ॥ अथ समासविधिः कथ्यते ॥ समासाः षड्विधाः ॥ तत्पुरुषः कर्मधारयो बहुव्रीहिर्द्विगुर्द्वंद्वोऽव्ययीभावश्चेति भेदात् ॥ तल्लक्षणानि तु ॥ पूर्वपदार्थप्रधानोऽव्ययीभावः ॥ उत्तरपदार्थप्रधानस्तत्पुरुषः ॥ उभयपदार्थप्रधानो द्वंद्वः ॥ अन्यपदार्थप्रधानो बहुव्रीहिः ॥ द्विगुकर्मधारयौ तत्पुरुषभेदौ ॥ समासार्थावबोधकं वाक्यं विग्रह इति ॥ तत्राष्टधा तत्पुरुषक्रमः ॥ प्रथमातत्पुरुषो द्वितीयातत्पुरुषस्तृतीयातत्पुरुषश्चतुर्थीतत्पुरुषः पंचमीतत्पुरुषः

षष्ठीतत्पुरुषः सप्तमीतत्पुरुषो नञ्तत्पुरुषश्चेति ॥ तत्र प्रथमातत्पुरुषो यथा ॥ अर्धं पिप्पल्याः अर्धपिप्पली ॥ पूर्वं कायस्येति पूर्वकायः ॥१॥ द्वितीयातत्पुरुषो यथा ॥ कृष्णं श्रितः कृष्णश्रितः ॥ ग्रामं गतो ग्रामगतः ॥ कांतारमतीतः कांतारातीतः ॥२॥ तृतीयातत्पुरुषो यथा ॥ शंकुलया खंडः शंकुलाखंडः ॥ धान्येनार्थो धान्यार्थः ॥ मासेन पूर्वो मासपूर्वः ॥३॥ चतुर्थीतत्पुरुषो यथा ॥ यूपाय दारु यूपदारु ॥ कुंडलाय हिरण्यं कुंडलहिरण्यम् ॥ गुरवे दक्षिणा गुरुदक्षिणा ॥ ४ ॥ पंचमीतत्पुरुषो यथा ॥ अर्थात् अपेतः अर्थापेतः ॥ सिंहात् भयं सिंहभयम् ॥ वृश्चिकात् भीः वृश्चिकभीः ॥५॥ षष्ठीतत्पुरुषो यथा ॥ कृष्णस्य भक्तः कृष्णभक्तः ॥ आम्रस्य फलं आम्रफलम् ॥ राज्ञः पुरुषो राजपुरुषः ॥६॥ सप्तमीतत्पुरुषो यथा ॥ अक्षेषु शौंडः अक्षशौंडः ॥ कर्मणि कुशलः कर्मकुशलः ॥ विद्यायां निपुणः विद्यानिपुणः ॥७॥ नञ्तत्पुरुषो यथा ॥ न ब्राह्मणः अब्राह्मणः ॥ न वृषभः अवृषभः ॥ पापाभावः अपापम् ॥ धर्मविरुद्धोऽधर्मः ॥८॥ इति तत्पुरुषः ॥ अथ कर्मधारयः कथ्यते ॥ स च विशेषणपूर्वपदो विशेष्यपूर्वपदो विशेषणोभयपद उपमानपूर्वपद उपमानोत्तरपदः संभावनापूर्वपदोऽवधारणापूर्वपदश्चेति भेदात्सप्तविधः ॥ तत्र विशेषणपूर्वपदः कर्मधारयो यथा ॥ कृष्णश्चासौ सर्पश्च कृष्णसर्पः ॥ कृष्णौ च तौ सर्पौ च कृष्णसर्पौ ॥ कृष्णाश्च ते सर्पाश्च कृष्णसर्पाः ॥ रक्ता चासौ लता च रक्तलता ॥ रक्ते च ते लते च रक्तल-

 

ते ॥ रक्ताश्च ताः लताश्च रक्तलताः ॥ नीलं च तत् उत्पलं च नीलोत्पलम् ॥ नीले च ते उत्पले च नीलोत्पले ॥ नीलानि च तानि उत्पलानि च नीलोत्पलानि ॥१॥ विशेष्यपूर्वपदः कर्मधारयो यथा ॥ वैयाकरणश्चासौ खसूचिश्च वैयाकरणखसूचिः ॥ गोपालश्चासौ बालश्च गोपालबालः ॥२॥ विशेषणोभयपदः कर्मधारयो यथा ॥ शीतं च तत् उष्णं च शीतोष्णम् ॥३॥ उपमानपूर्वपदः कर्मधारयो यथा ॥ मेघ इव श्यामो मेघश्यामः॥ कंबुवत् ग्रीवा कंबुग्रीवा ॥ चंद्रवत् मुखं चंद्रमुखम् ॥४॥ उपमानोत्तरपदः कर्मधारयो यथा ॥ पुरुषः व्याघ्र इव पुरुषव्याघ्रः ॥ नरः सिंह इव नरसिंहः ॥५॥ संभावनापूर्वपदः कर्मधारयो यथा ॥ गुण इति बुद्धिः गुणबुद्धिः ॥६॥ अवधा-



रणापूर्वपदः कर्मधारयो यथा ॥ विद्यैव धनं विद्याधनम् ॥ अविद्यैव शृंखला अविद्याशृंखला ॥७॥ मध्यमपदलोपी समासो यथा ॥ शाकप्रियः पार्थिवः शाकपार्थिवः ॥ देवपूजको ब्राह्मणः देवब्राह्मणः ॥ इति कर्मधारयः ॥ ॥ अथ बहुव्रीहिः कथ्यते ॥ स च द्विपदो बहुपदः सहपूर्वपदः संख्योत्तरपदः संख्योभयपदो व्यतिहारलक्षणो दिगंतराललक्षणश्चेति भेदात्सप्तविधः । तत्र द्विपदबहुव्रीहिर्यथा ॥ चित्राः गावो यस्य सः चित्रगुः गोपः ॥ प्राप्तं उदकं यं सः प्राप्तोदको ग्रामः॥ भुक्तं ओदनं येन सः भुक्तौदनो भूपः ॥ निर्जितः कामो येन सः निर्जितकामः शिवः॥ विभक्तं धनं यैस्ते विभक्तधना बंधवः ॥ दत्तः सूपो यस्मै सः दत्तसूपो ब्राह्मणः ॥ उद्धृतं धनं यस्मा-

त्तत् उद्धृतधनं कुंडम्॥चक्रं पाणौ यस्य सः चक्रपाणिः हरिः॥ करे स्थितं धनं यस्य सः करस्थितधनो वणिक् ॥ पुष्पिताः द्रुमाः यस्मिन् सः पुष्पितद्रुम आरामः ॥ बहवो यज्वानो यस्यां सा बहुयज्वा शाला ॥ पुष्पिताः द्रुमा यस्मिन् तत् पुष्पितद्रुमं वनम्॥ खरस्य मुखमिव मुखं यस्य सः खरमुखस्तुरगः ॥ उष्ट्रस्य मुखमिव मुखं यस्य सः उष्ट्रमुखो यक्षः ॥ उच्चैर्घंटो यस्याः सा उच्चैर्घंटा नारी ॥ अंगगात्रोदरस्तनकंठोष्ठदंतमुखाक्षिकेशाः स्त्रियां बहुव्रीहौ ईबंता भवंति ॥ ते च यथा ॥ सुंदरं अंगं यस्याः सा सुंदरांगी ॥ शोभनं गात्रं यस्याः सा सुगात्री ॥ कृशं उदरं यस्याः सा कृशोदरी ॥ चारू स्तनौ यस्याः सा चारुस्तनी ॥ इंदीवरे इव अक्षिणी



यस्याः सा इंदीवराक्षी॥ कंबुरिव कंठो यस्याः सा कंबुकंठी॥ कुटिलाः केशा यस्याः सा कुटिलकेशी ॥ इतरेषां अंगादिवाचकानां स्त्रीत्वेऽपि आबंतत्वमेव ॥ चारुदेहा विस्तृतालका आवृतकुचा कुंददशनेत्यादि ॥ उरुपृथुलघुबहुपटुऋजुस्वादुचारुमृदुशब्दानां स्त्रीलिंगविशेषणत्वे ईबंतत्वमपि ॥ यथा॥मृद्वी शाटी लघ्वी भाषेत्यादि॥ इति द्विपदबहुव्रीहिः॥ बहुपदो यथा ॥ अधिकः उन्नतः अंसो यस्य सः अधिकोन्नतांसः॥सहपूर्वपदो यथा॥ सह कृष्णेन वर्तत इति सकृष्णः॥ सह पुत्रेणेति सपुत्रः ॥ रामेण सह वर्तत इति सरामः ॥ संख्योत्तरपदो यथा॥ दशानां समीपे ये संति ते उपदशाः॥ संख्योभयपदो यथा॥ द्वौ वा त्रयो वा द्वित्राः ॥ व्यतिहार-

लक्षणो यथा ॥ केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवर्तत इति केशाकेशि युद्धम् ॥ दंडैर्दंडैः कृत्वा इदं युद्धं प्रवर्तत इति दंडादंडि ॥ दिगंतराललक्षणो यथा ॥ दक्षिणस्याः पूर्वस्याश्च दिशो यदंतरालं सा दक्षिणपूर्वा ॥ इति बहुव्रीहिः ॥ अथ द्विगुः ॥ द्विगुसमासो द्विविधः ॥ एकवद्भावी अनेकवद्भावी चेति ॥ एकवद्भावी द्विगुर्यथा ॥ त्रयाणां शृंगाणां समाहारस्त्रिशृंगम् ॥ पंचानां फलानां समाहारः पंचफली ॥ अनेकवद्भावी द्विगुर्यथा ॥ सप्त च ते ऋषयश्च सप्तर्षयः ॥ अथ द्वंद्वः ॥ द्वंद्वोऽपि द्विविधः ॥ इतरेतरसमाहारभेदात् ॥ इतरेतरद्वंद्वो यथा ॥ प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ ॥ रामश्च कृष्णश्च रामकृष्णौ ॥ समाहारद्वंद्वो यथा ॥ हरिश्च हरश्च



गुरुश्च एषां समाहारः हरिहरगुरु ॥ प्राणितूर्यसेनांगानां द्वंद्वैकवद्भावः ॥ प्राण्यंगे यथा ॥ पाणी च पादौ च मुखं च पाणिपादमुखम् ॥ तूर्यांगे यथा ॥ मार्दंगिकश्च वैणविकश्च मार्दंगिकवैणविकम् ॥ शंखश्च पटहश्च शंखपटहम् ॥ सेनांगे यथा ॥ राजन्याश्च रथाश्च अश्वाश्च राजन्यरथाश्वम् ॥ इति द्वंद्वः ॥ अथाव्ययीभावः ॥ स यथा ॥ तटं तटं प्रत्यनुतटम् ॥ गिरिं गिरिं प्रत्यनुगिरि ॥ क्रममनतिक्रम्य वर्तत इति यथाक्रमम् ॥ वेलायामित्यधिवेलम् ॥ कुंभस्य समीपे वर्तत इत्युपकुंभम् ॥ मक्षिकाणामभावो निर्मक्षिकम् ॥ हिमस्यात्ययः अतिहिमम् ॥ अव्ययीभावस्याव्ययत्वात्त्रिषु लिंगेषु समानं रूपम् ॥ इति षट् समासा निर्णीताः ॥ अथ

अलुक्समासो लुक्समासश्च ॥ लुक्समासो यथा ॥ तनुरेव लता तनुलता ॥ कृष्णा एव मेघाः कृष्णमेघाः ॥ अलुक्समासो यथा ॥ वने चरतीति वनेचरः ॥ पंके रुहतीति पंकेरुहम् ॥ मत्वर्थीयो यथा ॥ बुद्धिरस्यास्तीति बुद्धिमान् ॥ धनमस्यास्तीति धनवान् ॥ धीरस्य भावो धीरता ॥ जनानां समूहो जनता ॥ घटस्य भावो घटत्वम् ॥ वृक्षशाखा तत्पुरुषः श्वेताश्वः कर्मधारयः ॥ रक्तवस्त्रो बहुव्रीहिर्द्वंद्वश्चंद्रदिवाकरौ ॥ १ ॥ यल्लिंगं यद्वचनं या च विभक्तिर्विशेष्यस्य ॥ तल्लिंगं तद्वचनं सैव विभक्तिर्विशेषणस्यापि ॥२॥ सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ ३ ॥ आदौ कर्तृपदं वाच्यं



द्वितीयादिपदं ततः ॥ क्त्वातुमुँल्यप् च मध्ये तु कुर्यादंते क्रियापदम् ॥ ४ ॥ अथ कारकमुच्यते ॥ कर्ता कर्म च करणं संप्रदानं तथैव च ॥ अपादानाधिकरणमित्याहुः कारकाणि षट् ॥ ५॥ निर्देशे प्रथमा प्रोक्ता सैव चामंत्रणेष्वपि ॥ द्वितीया कर्मणि प्रोक्ता तृतीया कर्तृकरणयोः ॥ ६ ॥ ज्ञानज्ञाप्येऽङ्गविकारे हेतावपि च इष्यते ॥ तादर्थ्ये संप्रदाने च चतुर्थी स्याच्च सर्वदा ॥७॥ हेत्वपादानयोः पंचमी षष्ठी तु कर्तृकर्मसंबंधे ॥ अधिकरणनिमित्तसत्त्वे सप्तमी स्याच्च विषयेऽपि ॥ ८ ॥ यदा कर्तरि प्रथमा स्यात्कर्मणि द्वितीदा तदा ॥ यदा कर्तरि तृतीया स्यात्कर्मणि प्रथमा तदा ॥९॥ विशेषणं पुरस्कृत्य विशेष्यं तदनंतरम् ॥ कर्तृक-

र्मक्रियायुक्तमेतदन्वयलक्षणम् ॥१०॥ प्रथमांतस्तृतीयांतः षष्ठ्यंतः कर्ता ॥ द्वितीयांतं षष्ठ्यंतं कर्म ॥ तृतीयांतं करणम्॥ चतुर्थ्यंतं संप्रदानम् ॥ पंचम्यंतमपादानम् ॥ षष्ठ्यर्थः संबंधः ॥ सप्तम्यंतमधिकरणम् ॥ इति कारकाणि ॥ तो ती तें ते त्या तीं ॥ १ ॥ त्यातें त्यांतें त्याप्रत त्यांप्रत तीतें त्यांतें तीप्रत त्यांप्रत ॥२ ॥ त्यानें त्याणें तेणें त्यांनीं त्यांणीं त्यांहीं तेणेंकरून त्याकरून त्यांहींकरून त्यांकरून त्याशीं त्यांशीं त्यासहवर्तमान त्यांसहवर्तमान त्यासह त्यांसह तिनें तिणें तीकरून तिणेंकरून त्यांकरून तिशीं त्यांशीं तीसह त्यांसह ॥ ३ ॥ त्याकारणें त्यांकारणें तीसाठीं त्यांसाठीं तदर्थं ॥ ४ ॥ त्यापासून त्यांपासून त्याहून त्यांहून त्या-



स्तव त्यांस्तव त्यापेक्षां त्यांपेक्षां तीपासून त्यांपासून तीहून त्यांहून तीस्तव त्यांस्तव तीपेक्षां त्यांपेक्षां ॥५॥ त्याचा त्यांचा त्यास त्यांस तिचा त्यांचा तीस त्यांस ॥ ६ ॥ त्याचे ठायीं त्यांचे ठायीं त्यामध्यें त्यांमध्यें त्यांच्यामध्यें त्याजमध्यें त्यांजमध्यें त्यांत त्याच्यांत त्यांत त्यांच्यांत त्याच्याविषयीं त्यांच्याविषयीं त्याजविषयीं त्यांजविषयीं त्यांच्याविषयीं त्यांजविषयीं त्यानिमित्त त्याच्यानिमित्त त्याजनिमित्त त्यानिमित्त त्याजनिमित्त तो असतां ते असतां तिचे ठायीं त्यांचे ठायीं तीमध्यें तिच्यामध्यें तिजमध्यें त्यांमध्यें त्यांच्यामध्यें त्यांजमध्यें तींत तिच्यांत त्यांत त्यांच्यांत तीविषयीं तिच्याविषयीं तिजविषयीं त्यांविषयीं त्यांच्याविषयीं त्यांजविषयीं

तीनिमित्त तिच्यानिमित्त तिजनिमित्त त्यांनिमित्त त्याच्या-निमित्त त्यांजनिमित्त ती असतां त्या असतां ते असतां तीं असतां ॥ ७ ॥ हे अरे अगा अहो हो भो हे अगे गे अहो हो भो हे संबोधनम् ॥ इति समासचक्रं समाप्तम् ॥



॥ इति समासचक्रं समाप्तम् ॥

हें पुस्तक मुंबईंत पांडुरंग जावजी यांनीं आपल्या निर्णयसागर छापखान्यांत छापिलें. शके १८५४. सन १९३२.

Publisher:—Pandurang Jawaji,
Printer:—Ramchandra Yesu Shedge,
at the "Nirnaya-sagar" Press, 26-28, Kolbhat Lane, Bombay.